## प्रस्तावना

अथ एतद् ग्रन्थनिर्मातृणां किंचित् किंचित् चरित्रं समासेन लिख्यते तथाहि—

आसिकाऽभिधानदुर्गवासी, देवगृहनिवासी कूर्चपुरीयो जिनेश्वराचार्य आसीत्। तस्य च मठे तत्रत्याः सर्वे श्रावकपुत्राः प्रतिदिनं वाचनापठनार्थम् आगच्छन्ति। तत्र च एको जिनवल्लभनामा श्रावकपुत्रोऽस्ति, तस्य च जनको दिवं गतः, तं च जननी पालयति, असौ च पाठयोग्यः, अत-स्तया जनन्या तत्र मठे पठितुं प्रेषितः, सर्वेभ्यश्छात्रेभ्यः तस्य अधिकं पाठम् आ गच्छति, अथच कालान्तरे बहिर्गच्छता तेन जिनवल्लभचटेन टिप्पनकम् एकं प्राप्तं तत्र च विद्याद्वयं लिखितम् अस्ति, सर्पाकर्षणी सर्पमोचनी च, ततश्च तां कण्ठगतां कृत्वा, यावत् प्रथमा विद्या प्रत्यपाय पठिता, तावत् फटाटोपभीषणाः फुत्कुर्वाणाः चञ्चलचलजिह्वायुगलाः स्फुरद्रक्तलोचनाः, सर्वाभ्यो दिग्भ्य आगच्छन्तो विद्याप्रभावात् कृष्णा दृष्टा महानागाः, अथ निर्भयचेतसा तेन चिन्तितं, नूनं समत्यया इयं विद्या, पुनरुच्चारिता द्वितीया, तस्याः प्रभावेन पुनः पश्चा मुखाः चलिताः भुजङ्गमाः, १ तच्च स्वरूपं श्रुतं श्रीजिनेश्वरसूरिणा, ततश्च तस्य योग्यतां ज्ञात्वा तन्मातरं विविधोपायैः परितोष्य, स्वं शिष्यं विदीक्ष्य, अध्यापितश्च, तेन च जिनवल्लभेन समस्तलक्षणा छन्दोलङ्कारनाटकप्रमुख-गणितादिका निरवद्या विद्या अधीता, अथ च तस्य आचार्यस्य कदाचित् ग्रामादौ कार्यमुपगतम् ॥

भणितो पण्डितजिनवल्लभो जिनेश्वरसूरिणा, यथा यावत्प्रयोजनम् अनुष्ठीय वत्स् आगच्छामि तावत्त्वया सर्वोऽपि मठादे-चिन्ता कर्तव्या, विनयप्रणतेन जिनवल्लभेन उक्तं यदाज्ञापयन्ति पूज्याः, तथा विधास्ये इति॥ गतोऽसौ ग्रामान्तरे, ततो-

ज्यपुरारममोक्षोपायं जिज्ञासमानेन चिन्तितं जिनवल्लभेन, यथा माण्डारमध्य मञ्जूषा' पुस्तकभृता दृश्यन्ते, एतेषु मध्ये किं
मस्ति निभालयामि ॥ उन्छोटितम् एकं पुस्तकं, तच्च सिद्धान्तसत्कं, तत्रोक्तं पश्यति यथा साधुना द्विचत्वारिंशद्दोषविशुद्ध
पिण्डेन दशधारणा कर्त्तव्या ॥ न कल्प्यते यतीनां सचित्तपुष्पादिकं हस्तेनापि स्प्रष्टुं किम् अङ्गारयितुम्, इत्यादिविचारान्
दृष्ट्वा मनसा चिन्तयामास, अहो अन्य' स कश्चित् व्रताचारो येन मुक्तौ गम्यते, कतिदिनान्तरं कार्यं कृत्वा आगत आचार्य-
श्चिन्तयति, अहो सम्यग् रक्षितं जिनवल्लभेन मठादिकं तस्मात् यथायोग्यो निश्चिन्तितो, परं सिद्धान्तमन्तरेण अनेन अशेषा'
श्रुता विद्या अधीता' । अतः सिद्धान्ताध्ययनाय श्रीमदभयदेवसूरीणां पार्श्वे प्रेषयामि, प्रेषित' श्रीमदभयदेवाचार्यपार्श्वे, आचार्ये
णापि योग्यतां ज्ञात्वा सिद्धान्तप्रोक्तविधिना सर्व सिद्धान्तम् अध्यापितं । कथितं च वत्स इदानीं सिद्धान्तोक्तसाधुसमाचार
स्तावत् समस्तोऽपि त्वयाऽवगतो, अतस्तदनुसारेण क्रियोद्धारेण यथा वर्त्तसे तथा विधेयं ॥ जिनवल्लभगणिना पादयोर्निपत्य
उक्तं, यथा पूज्यपादा आज्ञापयन्ति । पश्चात् आगतो जिनेश्वरसूरिनगरसमीपे न च मठे गतवान्, प्रातः सकललोकेन सार्द्धं
समायात आचार्योऽभिमुखं गतो जिनवल्लभ प्रणतश्च, ततो गुरुणा पृष्ट' किमिति मध्ये त्वं नागत', जिनवल्लभगणिना अभिहितं,
भगवन् गुरुमुखाज्जिनवचनामृतं पीत्वा कथं विषवृक्षसदृशं चैत्यवासं सेवितुमिच्छामि, किं बहुना जिनेश्वरसूरिम् आज्ञाप्य
श्रीमदभयदेवाचार्याणां पार्श्वे वसतिवासम् अङ्गीचकार, श्रीमदभयदेवसूरिणा ज्ञातं यथा अयमेव अस्मत्पदयोग्यः, तथापि ता
दृशम् अवसरम् अलब्ध्वा, केनापि कारणेन स्वपदे गच्छाधारको वर्धमानाचार्यो निवेशित', जिनवल्लभगणये च स्वकीयोप
संपदं दत्तवन्त', पुनः एकान्ते प्रसन्नचन्द्राचार्यो भणितो यथा त्वया मदीयपदे मय्यल्पे जिनवल्लभगणि' स्थापनीयः श्रीमदभय

देवाचार्योऽपि स्वर्गं गताः ॥ प्रसन्नचन्द्राचार्यस्यापि गुरुपदनिवेशनप्रस्तावो न जातः, ततस्तेनाऽपि स्वायुः परिसमाप्तसमये श्रीदेवभद्राचार्याणां विज्ञप्तं यद् एष गुरूपदेशो भवता सफलीकार्यो, मया कर्तुं न शाकितः, तैरपि वर्तमानयोगेन प्रतिपन्नं, १ श्रीजिनवल्लभगणिर्वाचनाचार्योऽपि कतिचिद् दिनानि पत्तनभूमौ विहृत्य, न तादृशो बोधो गुर्जरत्र मण्डले कस्यापि विधातुं शक्यते, येन समाधानम् उत्पद्यते, इति मनसि कृत्वा आगमविधिना भव्यजनमनःसु क्षेत्रभूमिषु भगवद्भणितविधिधर्मबीजवपनाय श्रीमेदपाटदेशादिषु विहारं चकार ॥ किंबहुना तात्कालदेशान्तरस्थनानाग्रामनगरादिषु विहारं कुर्वाणः चित्रकूटाचलदुर्गे प्राप्तः तत्र च साधारण–सड्ढक–सुमति–वीरक–मानदेवादिश्रावकान्, नरवर्म–भूपतिं च प्रतिबोध्य नानादेशेषु श्रावकाणां धर्मपरिणामम् उत्पाद्य पुनर्नागपुरे विहारं चक्रुः श्रीजिनवल्लभगणयः ॥

अत्रान्तरे श्रीदेवभद्राचार्या विहारक्रमं कुर्वाणाः श्रीअणहिल्लपत्तने समायातास्तत्रागतैः चिन्तितं यथा प्रसन्नचन्द्राचार्येण पर्यन्तसमये ममाग्रे भणितं यथा जिनवल्लभगणिः श्रीअभयदेवसूरिपदे निवेशनीयः, स च प्रस्तावो अधुना वर्त्तते ॥ ततः श्रीनागपुरे श्रीजिनवल्लभगणये लेखः प्रेषितः त्वया शीघ्रं समुदायेन सह चित्रकूटे विहर्तव्यं, तत आगताः चित्रकूटे श्रीजिनवल्लभगणयः, श्रीदेवभद्राचार्या अपि सपरिवाराः, ततो महता विस्तरेण श्रीदेवभद्राचार्यैः श्रीमदभयदेवसूरिपदे श्रीजिनवल्लभगणिः संस्थापितः ॥ अनेको भव्यलोकः श्रीजिनवल्लभसूरीन् समाश्रित्य मोक्षमार्गे प्रवृत्त इति । तैरेव नानाग्रन्थनिर्मातृभिः सकलभगवति प्रकटप्रभावैः अनेकनरवरप्रभृतिपूजितपादपीठैः श्रीजिनवल्लभसूरिभिः पीयूषरसायवर्षिणी एषा दुरितरजसमीरणनाम्नी कृतिः–विहिता अतो भव्यजनैस्तदवलोकनेन भवभयं सफलं संपादनीयम् ॥ विशेषतस्तु तेषां चरित्रं गणधरसार्धशतकाद् अवलोकनीयमिति शुभम् ॥

अर्हम् ।

नवाङ्गीवृत्तिकारकश्रीमदभयदेवसूरिशिष्यमहाकविश्रीमज्जिनवल्लभसूरिविरचितम्

श्रीसमयसुन्दरोपाध्यायकृतवृत्तिसहितम् ।

# दीपमालिकाव्याख्यानगर्भितश्रीवीरस्तोत्रम् ।

नत्वा वीरजिनेन्द्रं दुरिअरयसमीरस्य च वृत्तिमहम् । अतिसुगमामिह वक्ष्ये सीघ्र तस्यार्थबोधार्थम् ॥१॥
श्रीजिनचन्द्रगणाधिपा शिष्यादिसकलचन्द्रगणिशिष्या । प्रवदन्ति समयसुन्दरनामान पाठकाःप्रकटम्

दुरिअरयसमीर मोहपकोहनीर । पणमिय जिणवीर निज्झियाणगवीर ॥
भवभउपडिकूल तस्स मुक्खाणुकूल । चरिअमिह समूल किंचि कित्तेमि थूलं ॥ १ ॥

व्याख्या—अह तस्स महावीरदेवस्स चरितं कीर्त्तयिष्यामि–कथयिष्यामि किं कृत्वा जिनवीरं प्रणम्य जिनो

रागद्वेषजेता वीरो महावीरस्तं नत्वा किं विशिष्टं जिनवीरं "दुरियरयसमीरं" दुरितरूपं यद् रजस्तत्र समीरो वायुरिव यथा वायुः रजो हरति दूरीकरोति तथा श्रीमहावीरदेवो दुरितं हरति, पुनः किं विशिष्टं श्रीवीरं "मोहपंकोहनीरं" मोहरूपो यः पङ्कः कर्दमः तस्य ओघः समूहस्तत्र नीरं यथा नीरं पानीयं कर्दमसमूहं गमयति तथा श्रीवीरो मोहं मोहनीयकर्म गमयति, पुनः किं विशिष्टं श्रीवीरं "निज्जियाणंगवीरं" निर्जितो अतिशयेन जितो ऽनङ्गरूपः कन्दर्परूपो वीरः सुभटो येन स एतावता येन दुर्जयेन कन्दर्पेण त्रिभुवनं जितं सोऽपि कन्दर्पो भगवता जितः अर्थात् किं विशिष्टं चरितम् "भवभडपडिकूलं" भवरूपः संसाररूपो यो भटः सुभटस्तस्मात् प्रतिकूलं पराङ्मुखं यतो भगवच्चरितश्रवणस्म रणाद्विना भवभटभङ्गः स्यात्, पुनः किं विशिष्टं चरितं "मुक्खाणुकूलं" मोक्षाय अनुकूलं मोक्षप्रापकम् इह जगति, पुनः किं विशिष्टं चरितं समूलं सहमूलेन सम्यक्त्वप्राप्तिभवरूपेण वर्तते यत्र तत्, एतावता अनादौ संसारे भ्रमता यस्मिन् भवे प्रथमं सम्यक्त्वं प्राप्तं श्रीमहावीरजीवेन तस्मात् मूलभवाद् आरभ्य, पुनः किं विशिष्टं चरितं "थूलं" ये अतिप्रसि-द्धभवास्तत् सम्बन्धि परमसूक्ष्मभवसम्बन्धि तदपि सर्वं नहि किन्तु "किंचि" किंचित् स्तोकम् इति प्रथमकाव्यार्थः ॥ १ ॥ अथ श्रीमहावीरदेवस्य तच्चरितं विस्तरतः कथयन्ति"

ग्रामेशस्त्रिदशो मरीचिरमरो घोषा परिव्राट् सुरः, संसारो बहु विश्वभूतिरमरो नारायणो नारकः ।
सिंहो नैरयिको भवेषु बहुशश्चक्री सुरो नन्दनः, श्रीपुष्पोत्तरनिर्जरो ऽवतु भवात् वीरस्त्रिलोकीगुरुः

किर गामचिंतगभंवे सम्मत्त लहिअ रहिअ सोहम्मे। चविउ भविउं मेरीई लहिउं पइउ च चरणभर २
उस्सुत्तलेसदेसणकयसागर कोडि कोडि भवभमणो । तह पढमवासुदेवो भविअ तिविठ्ठो जिणुघिट्ठो ३
ससरिय भवे जाओ अवरविदेहम्मि मूयनयरीए। धारणिधणजयसुओ पियमित्तो नाम चक्कहरो ॥ ४॥
तुडिअगाऊ पालिअ पव्वज्ज वास कोडिमुववन्नो । महसुक्के परमाऊ सव्वट्ठे वर विमाणम्मि ॥ ५ ॥
ता जम्बूदीवभरहे भद्दाजिअसत्तुरायअगरुहो। छत्तगाएपूरीए अहेसि तं नदणो राया ॥६॥ पञ्चभि: कुलक,

व्याख्या–हे देव त्व किल इति सत्ते ग्रामचिन्तकभवे सम्यक्त्व लब्ध्वा प्रियमित्रो नाम चक्रधरो जात इति चतुर्थगाथास्थितक्रियया सम सम्बन्धः, तत्र ग्रामचिन्तकभवे कथ सम्यक्त्व लब्धम् तदाह, जम्बूद्वीपे प श्चिममहाविदेहक्षेत्रे नयसारनामा ग्रामचिन्तक आसीत्, स एकदा राज्ञ आदेशेन प्रधानकाष्ठग्रहणार्थं महाऽटव्या जगाम तत्र सार्थात् भ्रष्टान् क्षुधातृषापीडितान् आतपेन तप्तान् आगतान् साधून् दृष्ट्वा प्रासुकान्नपानीयैः प्रत्यला- भयत्, ततः साधुभिर्योग्यतां ज्ञात्वा नयसारस्य अग्रे धर्मदेशना दत्ता तया धर्मदेशनया नयसारेण अनादौ ससारे प्रथम सम्यक्त्व लब्धम् , पश्चात् नयसारेण ते साधवो मार्गे प्रापिताः, साधवः स्वगच्छसघाटके मिलिता नयसारो ऽपि स्वस्थान प्राप्तः सम्यक्त्वं च पालितवान् इति प्रथमो भवः॥१॥ततः "रहिअ सोहम्मे" हे–देव त्व सौधर्मे प्रथमदेवलोके

स्थित्वा एकपल्योपमस्थितिर्देवो जात इत्यर्थः, इति द्वितीयो भवः ॥२॥ ततः "चविउं" च्युत्वा "भविउं" भूत्वा "मरीई" मरीचिनामा श्रीमदृषभदेवस्य पौत्रो भरतस्य च पुत्रो जातः, ततः "छविउ चइउ च चरणभर" श्रीम दृषभदेवसमीपे चरणभर संयमभार ज्ञात्वा चिर चारित्रं परिपाल्य ,ततः चारित्रावरणीयकर्मोदयात् द्वाविंशति २२ परीषहान् सोढुम् असमर्थः सन् विचारितवान् सर्वथा संयमत्यागे लज्जा मालिन्य च भवति ततो दर्शनान्तर करोमि इति ध्यात्वा च पुनश्च चरणभर त्यक्त्वा त्रिदण्डिवेष कृत्वा श्रीऋषभदेवपरिवारस्य पार्श्वे तिष्ठति, अन्यदा प्रस्तावे श्रीभरतचक्रवर्त्तिना पृष्टं हे स्वामिन् अस्याम् अवसर्पिण्याम् अस्मिन् भरतक्षेत्रे सांप्रतम् अस्यां पर्षदि कोऽपि भावी तीर्थंकरजीवो ऽस्ति नवा, ततो भगवता प्रोक्तम्, हे भरत तव पुत्रो मरीचिनामा अस्मिन् भरतक्षेत्रे पोतनपुरे श्रेयांस एकादशतीर्थंकरवारके त्रिपृष्ठनामा प्रथमो वासुदेवो भविष्यति ॥ १ ॥ पुनर्महाविदेहक्षेत्रे मूकानगर्यां प्रियमित्रनामा चक्रवर्त्ती भविष्यति ॥ २ ॥ पुनरत्रैव भरतक्षेत्रे महावीरदेवनामा चतुर्विंशतितमस्तीर्थंकरो भावी, इति पदवीत्रय प्राप्स्यति, इति श्रुत्वा प्रभोरनुज्ञां ज्ञात्वा मरीचिसमीपे गत्वा इद कथितवान् भो मरीचे त्व प्रथमो वासुदेवो भावी इति वक्त्वा ततो न वन्दे, नापि चक्रवर्त्ती भावी ततो वन्दे, नापि त्रिदण्डी दर्शनी वन्दे, किन्तु श्रीमदृषभदेवेन प्रोक्तम् अयं मरीचिश्चतुर्विंशतितमस्तीर्थंकरो भविष्यति, ततोऽह त्वां वन्दे, एवं कथयित्वा तिस्रः प्रदक्षिणां दत्त्वा वन्दित्वा भरत स्वस्थानं गतः" अथ मरीचिर्भरतप्रोक्तं पदवीत्रय श्रुत्वा मदेन भुजदण्डौ आस्फाल्य अब्रवीत्, अहो मह वासुदेवो भवि

स्यामि, अहो अहं चक्रवर्त्ती भविष्यामि, अहो अहं चतुर्विंशतितीर्थंकरो भविष्यामि, पुनरपि मम वंश इक्ष्वाकुः पितामहो मम श्रीऋषभदेवतीर्थंकरः पिता तु श्रीभरतचक्रवर्त्ती ततो मत्समानो न कोऽपि भाग्यवान् संसारेऽस्ति इत्येव वदन् वारत्रयं त्रिदण्डेन पादाभ्यां च भूमिम् आस्फोटयन् मदेन नीचैर्गोत्रकर्म बबन्ध "पुन किं विशिष्टो मरीचिः" "उस्सुत्तलेसदेसण कयसागरकोडिकोडिभवभमणो" उत्सूत्रस्य कपिलाग्रे यादृक् वचनं भाषितं तस्य आवश्यकसूत्रस्य श्रीतिलकाचार्यकृताया आवश्यकलघुवृत्तेरभिप्रायेण दुर्भाषितस्य लेशःदेशस्तेन कृत सागरकोटाकोटिं यावत् भवभ्रमण संसारपर्यटनं येन सः, कथं मरीचिना उत्सूत्रं भाषितं तत्सम्बन्धमाह । एकदा मरीचिः कर्मवशात् व्याधिना पीडितमतः चिन्तयति स्म यदहम् अमुना व्याधिना रहितो भविष्यामि तदा कमपि शिष्य वैयावृत्यकारक करिष्यामि एकाकी चाहं दुःखी भवामि, ततः समाधिर्जातः, अन्यदा एको राजपुत्र कपिलनामा मिलितः, मरीचिना साधुधर्मो वाचितः, कपिलः प्राह भो मरीचे यदि साधुधर्म्म ईदृक् मभ्यस्तदा त्वया कथं न क्रियते, मरीचिराह, अहं पापी, ततः कपिलः प्राह तर्हि तव दर्शने धर्मो नास्त्येव, तदा मरीचिना विचारितम् एकाकिनो मम यदि द्वितीयोऽयं सहायी स्यात् तदा वरं, ततो मरीचिना प्रोक्त हे कपिल अर्हन्मते सपूर्णधर्मोऽस्ति पर मम मतेऽपि किंचिद् धर्म्मोऽस्ति, इति उत्सूत्र भाषितं ततो मरीचिश्चतुरशीतिपूर्वलक्षाणि आयुः पालयति स्म इति तृतीयो भवः ॥ ३ ॥ अत्र "तह" इति कोऽर्थः तथाशब्दोऽत्र अनुक्तार्थान्तरभवसूचकः "अत्र" दुरियरयसमीरस्तोत्रमध्ये

ये भवाः सूक्ष्मा यादराश्च नोक्ताः सन्ति, तेऽपि संगृहीता ज्ञेया इत्यादिश्च च अमी "ततो मृत्वा ब्रह्मलोके पञ्चम देवलोके दशसागरोपमायुर्देवो जात " इति चतुर्थो भवः ॥ ४ ॥ ततश्च्युत्वा कोल्लाकसन्निवेशे कौशिकनामा ब्राह्मणो जात, प्रान्ते त्रिदण्डिवेष लात्वा अशीतिपूर्वलक्षायुः प्रपाल्य मृत्वा च बहून् नरादिभवान् भ्रान्तः, इति पञ्चमो भव ॥ ५ ॥ अत्र सूक्ष्मभवाः सप्तविंशतिभवमध्ये न गणनीयाः, तत ईशाने द्वितीयदेवलोके मध्यमायुर्देवो जातः, इति षष्ठो भव ॥ ६ ॥ ततश्च्युत्वा स्थूणाख्यसन्निवेशे पुष्पमित्रनामा विप्रो भूत्वा त्रिदण्डित्वम् आश्रित्य द्वासप्तति पूर्वलक्षायु प्रपाल्य मृत इति सप्तमो भवः ॥ ७ ॥ ततः प्रथमे देवलोके मध्यमायुर्देवो जात इति अष्टमो भवः ॥ ८ ॥ ततश्च्युत्वा चैत्यसन्निवेशे अग्निद्योतनामा ब्राह्मणो जातः प्रान्ते त्रिदण्डित्वम् आश्रित्य चतुःषष्टिपूर्वलक्षायुः प्रपाल्य मृत इति नवमो भवः ॥ ९ ॥ तत ईशाने द्वितीयदेवलोके मध्यमायुः देवो जात इति दशमो भवः ॥ १० ॥ ततो मन्दिराख्ये सन्निवेशे अग्निभूतिनामा द्विजो जातः प्रान्ते त्रिदण्डित्वम् आश्रित्य षट्पञ्चाशत्पूर्वलक्षाणि आयु प्रपाल्य मृत इति एकादशो भव ॥ ११ ॥ ततस्तृतीये सनत्कुमारदेवलोके मध्यमायुर्देवो जात इति द्वादशो भवः ॥ १२ ॥ ततश्च्युत्वा श्वेताम्ब्यां नगर्यां भारद्वाजनामा ब्राह्मणो जातः, प्रान्ते त्रिदण्डित्वम् आश्रित्य चतुश्चत्वारिंशत्पूर्वलक्षाणि आयूंषि पालयित्वा मृत इति त्रयोदशो भवः ॥ १३ ॥ ततो माहेन्द्रे चतुर्थे देवलोके मध्यमायुर्देवो जात इति चतुर्दशो भवः ॥ १४ ॥ ततश्च्युत्वा भव भ्रान्त्वा राजगृहनगरे स्थविरनामा द्विजो जातः, प्रान्ते त्रिदण्डित्वम् आश्रित्य

चतु स्त्रिंशत्पूर्वलक्षाणि आयूंषि पालयित्वा मृत , इति पञ्चदशो भव ॥ १५ ॥ ततः पञ्चमे ब्रह्मदेवलोके मध्यमा युर्देवो जात इति षोडशो भवः ॥ १६ ॥ ततश्च्युत्वा बहुभव भ्रान्त्वा राजगृहनगरे विश्वनन्दिनामा राजा तस्य पुत्रो विशाखनन्दी लघुभ्राता विशाखभूतिर्युवराजा तस्य प्रिया धारणी तयो पुत्रो विश्वभूतिनामा मरीचिजीवो जात स क्रमप्राप्तयौवनः सन् एकदा पुष्पकरण्डके वने स्वकीयाभिरन्तःपुरीभिः सार्द्धं साक्षात् कन्दर्प इव क्रीडते स्म" मन्यदा विशाखनन्द्यपि राजपुत्र क्रीडार्थं तस्मिन् वने गतः "तस्मिन्नवसरे वनमध्ये क्रीडन्त विश्वभूतिं श्रुत्वा विल क्षीभूय वनात् बहिरेव स्थित्वा स्वकीयपित्रे विश्वनन्दिराजाय स्वरूप ज्ञापयामास, ततः स्वकीयपुत्रक्रीडनेच्छापूर णाय सभामध्ये मायया एवम् अब्रवीत्, भो सुभटाः पुरुषसिंहो राजा सदैव अस्माक् आज्ञावशवर्ती अपि सांप्रतम् आज्ञां न मन्यते ऽतो वय त जेतु यामः इत्युक्त्वा प्रयाणभेरीम् अवादयत् ततो विश्वभूतिर्मरीचिजीवः एतद्वार्त्तां श्रुत्वा क्रीडावनात् शान्त पुरो बहिर्निसृत्य राज्ञः समीपे आगत्य एवम् उक्तवान् "मयि" सति युष्माक गमन न युक्तम् इत्युक्त्वा राजान गच्छन्त निवार्य स्वय तत्र गत्वा पुरुषसिंहम् आज्ञावशवर्त्तिनम् एव ज्ञात्वा तद्दत्त प्राभृत राज्ञोऽग्रे मुक्तवान् तत पुनरपि विश्वभूतिः सान्तःपुरी लात्वा तस्मिन् वने क्रीडार्थं गतः' 'ततो द्वारस्थपुरुषैः प्रोक्त मध्ये ऽस्माक स्वामी विशाखनन्दी क्रीडति, इति तद् वचन श्रुत्वा विश्वभूतिरचिन्तयत् अहो मायया छल कृत्वा अह राज्ञा वनात् निष्कासित " इति क्रोध कृत्वा मुष्टया कपित्थवृक्ष प्राहरत्, पतिता कपित्थफलश्रेणी तां द्वारस्थपुरु-

पाणौ दर्शयित्वा प्रोवाच रेरे द्वारस्थपुरुषा अहं मायिनां मस्तकानि एव पातयामि ईदृशी मम शक्तिरस्ति, परं तात समपितृव्यचरणभक्तिं गणयामि, अथ यदि निजबन्धुभिरपि एवं वञ्चना क्रियते तदा रागैरलं मम, एवं वैराग्येण स्वयं आर्यसंभूतिनाम मुनिपार्श्वे दीक्षां जग्राह "कियता कालेन विश्वभूतिर्यतिः गीतार्थो जातः, परम् उत्कृष्ट तपस्तपोभिः कृशवपु सन् गुर्वाज्ञया मथुरां प्राप्तः, तदवसरे विशाखनन्दी राजपुत्रोऽपि मथुरायां यो राजा तस्य पुत्रीं परिणेतुं ससैन्यः मथुरायां समागतः, तस्मिन् समये मासक्षपणपारणे विश्वभूतियतिः पुरीं प्रविशन् विशाखनन्दि सेवकैः तादृक् कृशवपुः स्वस्वामिनो विशाखनन्दिनो दर्शितः तस्मिन् प्रस्तावे एकया गवा विश्वभूतियतिः संघट्टितो भूमौ पपात" तदा विशाखनन्दिसैन्यकैः प्रोक्तं हे साधो क्व गतं तव कपित्थपातनबलं ततस्तत् कुवचनं श्रुत्वा क्रोधेन तेषां सबलं दर्शनार्थं गां शृङ्गाभ्यां गृहीत्वा ऊर्ध्वं भ्रामयित्वा इदमवादीत् अरे रे यूयं प्रभुतया मदोन्मत्ता माम् उपहसत परम् अनेन तपसा युष्मत्प्रभोः विशाखनन्दिनो भवान्तरे मृत्यवे भूरिबलो भूयासम् इति निदानं चक्रे, ततो वर्षसहस्रो दीक्षां कोटिवर्षाणि आयुश्च पालयित्वा मृत इति सप्तदशो भवः ॥ १७ ॥ ततो महाशुक्रे सप्तमे देवलोके सप्तदशसागरोपमायुर्देवो जातः, इति अष्टादशो भवः ॥ १८ ॥ अत्र सूत्रम् "पढमवासुदेवो भविय तिविट्ठो जिणुद्दिट्ठो" प्रथमवासुदेवो भविय इति भूत्वा किं विशिष्टो वासुदेवः "तिविट्ठो" त्रिपृष्ठः त्रयः पृष्ठकरण्डका आसन्निति त्रिपृष्ठः पुनः किं विशिष्टो वासुदेव "जिणुद्दिट्ठो" जिनेन श्रीऋषभदेवेन भरताय "उद्दिट्ठो" निवेदितः "वासुदेव-

मम्य-पल्येन्द्रम अयं ततश्च्युत्वा पोतनपुरे नगरे प्रजापतिनामा राजा मृगावती नाम्नी राज्ञी तयोः पुत्रः सप्तस्वप्नसूचि-तत्रिपृष्ठनामा प्रथमो वासुदेवो जातः "अथ एकदा शङ्खपुरासन्नस्तुगाधरः पर्वतो पर्वते तस्य गुहायां विशाखनन्दि-जीवो महासिंहोऽस्ति स आसन्नशालिरक्षकान् पुरुषान् हन्ति, महान् उपद्रवो जातस्ततस्तन्मारणाय चटन्त निजपितरं निवार्य सर्वसैन्यं सज्जीकृत्य गतस्तत्र वासुदेवो" वाद्यनिर्घोषं श्रुत्वा जाग्रतया मात्रा सिंहा जागरितो निजपुत्रसिंहः "अत्र कथिवचनचातुरी मात्रा निजपुत्र प्रति भणितं"

रेसीह ममगव्यकरि चडिआयओ सुरतांण। कइसन्मुखकरि अप्पणउ कइअवगाहेराण ॥ १ ॥

ततः पुच्छाच्छोटन कृत्वा सिंहेन मातुः प्रोक्त,

रे सिंहा मम शकधरि वाजणदेहि नीसाण। जउमुखदीठइ डगभरइ तउ जणणी अप्रमाणः ॥२॥

इत्युक्त्वा फालां भृत्वा वासुदेवाग्रे आगतो वासुदेवेन चिन्तितम् अय एकाकी अहं तु सैन्ययुक्तस्ततो न न्याययुक्त तत एकाकी जातः, पुनरयम् आयुधरहितोऽहं तु सायुधस्ततः शस्त्राणि दूरे मुमोच, पुनरय निरावरणोऽहं तु सन्नाहा दियुक्तस्ततः सन्नाहादि मुक्त्वा स्वयम् अपि निरावरणो जातः, ततो "हक्कित सिंह फालां भृत्वा सन्मुखम् आगच्छ-न्तम् अतुलबलेन वासुदेवेन निदानवशात् हेलया एव हस्ताभ्याम् उष्टपुटौ गृहीत्वा खण्डद्वय कृत्वा हतवान् सिंहो म्रियमाणः प्राणान् न त्यजति यतोऽयं सिंहो मनुष्येण मारितः, ततस्त्रिपृष्ठवासुदेवस्य यः सारथी गौतमस्वामिजीव

स्तेन सिंह प्रत्युक्त, रे सिंह यथा त्व पशुपतिः सिंहस्तथा अयं नरपतिः सिंहो न सामान्यपुरुषस्ततो मा अधृतिं कुरु, इति समाश्वासितः सिंहो मृत्वा चतुर्थे नरके गतः ॥ अथ त्रिपृष्ठवासुदेवस्त्रिखण्डराज्यश्रियं भुञ्जानः "श्रीश्रेयासनाम ११ तीर्थंकरपार्श्वे पुन सम्यक्त्व प्राप" अन्यदा नाटके पतति सति वासुदेवेन शय्यापालकस्य प्रोक्त, भो मयि निद्रागते सति नाटक पतत् सत् रक्षणीय, सुप्तो वासुदेवो, न रक्षित तेन नाटक, प्रबुद्धो वासुदेवः प्राह, भो किं न रक्षित, तेन विचारित, राज्ञो ऽग्रे मृषा न वक्तव्यम् ॥ १ ॥ स्त्रिया अग्रे गुह्य न वाच्यम् ॥ २ ॥ मार्गे एकाकिना न गन्तव्यम् ॥ ३ ॥ पश्चानां वचन न लोपनीयम् ॥ ४ ॥ इति महापुरुषशिक्षाः "ततः सत्य वच्मि हे स्वामिन् मम गीतगानतानमानादिक कर्णयोः सुखद जात ततो राजा सत्ये कथितेऽपि सन्नीतिम् उल्लङ्घ्य क्रुद्धोऽहो येन मम आज्ञामङ्गीकृतः तेन मत्स्वधः कृतो यदुक्तम्

"आज्ञाभङ्गो नरेन्द्राणा गुरूणां मानमर्दनम् । पृथक् शय्या च नारीणाम् अशस्त्रवधम् उच्यते"

इति शय्यापालकस्य कर्णयोस्त्रपु नामित शय्यापालकश्च क्रन्द कुर्वन् ममार, त्रिपृष्ठवासुदेव इत्यादिकठोर कर्माणि कृत्वा चतुरशीतिवर्षलक्षाणि आयु पालयति स्म, इति एकोनविंशतितमो भवः ॥ १९ ॥ ततो मृत्वा सप्तमे नरके जातः ॥ इति विंशतितमो भवः ॥ २० ॥ ततो निःसृत्य सिंहो जातः, इति एकविंशतितमो भवः ॥ २१ ॥ ततो मृत्वा चतुर्थनरक गत इति द्वाविंशतितमो भव ॥ २२ ॥

ससरिय भवे जाओ अवरविदेहम्मि मूअ नयरीए। धारणिधणजयसुओ पिअमित्तो नामचक्कहरो ॥ ४ ॥

व्याख्या—ससृत्य नरकान् नि'सृत्य ससार भ्रान्त्वा त्व चक्रधारिजीव इति सम्बन्धः, अत्र शिष्य' प्राह "ननु कस्मिन् भवे भगवता चक्रवर्त्तिभोग्यकर्मोपार्जितम्" गुरुः प्राह, यद्यपि अस्मिन् ग्रन्थे हेतुः प्रोक्तो नास्ति, परं चतुः षष्टित्रयोदशशते, सम्वत्सरे १३६४ श्रीदेवभद्रकृते श्रीवीरचरित्रे एवम् उक्तमस्ति "तथाहि नयसारजीव' ससारे भ्रमन् एकदा रथपुरनगरे प्रियमित्रो राजा, विमला राज्ञी तयोः पुत्रो जात', तस्य नामद्वय प्रियमित्रसुतः । १ । विमलश्रीश्च स च वर्द्धमान' सन् सकलकलाकुशलः यौवन प्राप, ततः पित्रा द्वात्रिंशत्कन्याः परिणायितः, स एकदा वने क्रीडन् पाशबद्ध मृग मोचितवान् तदनुकम्पया च मनुष्यायुर्निबद्धवान्, पित्रा राज्यं दत्त स राजा एकदा ज्ञानिनो गुरोः पार्श्वे धर्मं श्रुत्वा दीक्षां जग्राह, ततोऽत्युग्रतपांसि तप्त्वा चक्रवर्त्तिनाम् कर्मोपार्जितवान् प्रान्ते मासिकी सलेखनां कृत्वा चक्रवर्त्ती जात "ननु"

सुरनेरइएहिं चिअ हवति हरि, अरिह २ चक्कि ३ बलदेवो इत्युक्तत्वात्

कथ मनुष्यो मृत्वा चक्रवर्त्ती जातः, उच्यते यथा अस्मिन् क्षेत्रे दश आश्चर्याणि जातानि, तथा तस्मिन् नपि क्षेत्रे इद आश्चर्यमध्ये गणितम् अस्ति, पुन' तत्र नागकुमारतस्तीर्थंकरो जातोऽस्ति, तीर्थंकरस्तु देवगतिम् आश्रित्य वैमा निकदेवेभ्य एव आगच्छति, पुनर्विस्तारार्थिना तद्वीरचरित्र द्रष्टव्य ततस्त्व जातो अपरविदेहे पश्चिममहाविदेहे क्षेत्रे

मूकानगर्यां धारणी नाम्नी पट्टराज्ञी धनञ्जयो नाम राजा तयोः सुतःपुत्रः प्रियमित्रनामा चक्रधरश्चक्रवर्त्ती किं वि शिष्टः "तुडिअगाऊ" तुडिताङ्गम् आयुर्यस्य स तुडिताङ्गायुः चतुरशीतिपूर्वलक्षायुः इत्यर्थः "तुडिताङ्गे वर्त्तमान यथा एकोनषष्टिलक्षकोटीकोटयः सप्तविंशतिसहस्रकोटीकोटयः चत्वारिंशत् कोटीकोटयश्च वर्षाणां एतद् वर्षप्रमाणमायुः "तया "पालिय पवज्ज वासकोडिं" प्रव्रज्यां दीक्षां च वर्षकोटिं यावत् पालयित्वा एतावता चक्रवर्त्तिभवे भगवता कोटिवर्षाणि दीक्षा पालिता चतुरशीतिपूर्वलक्षाणि सर्वायुः पालितम्" इति त्रयोविंशतितमो भवः ॥२३॥ ततः "स्व"

"उववन्नो महसुक्के परमाऊ सव्वट्ठे वरविमाणम्मि"

उत्पन्नो महाशुक्रे सप्तमे देवलोके सर्वार्थनाम्नि प्रधानविमाने किं विशिष्टस्तत्र "परमाऊ" परम प्रकृष्टम् उत्कृष्टम् मायुर्यस्य स सप्तदशसागरोपमायुरित्यर्थः" इति चतुर्विंशतितमो भवः ॥ २४ ॥ "तो जम्बूदीवभरहे" ततस्तत्र जम्बूद्वीपे भरतक्षेत्रे" भद्राजिपसत्तु रायअगरहरो" भद्राराज्ञी जितशत्रु नामा राजा तयोरङ्गरुहः पुत्रो जातः कस्यां नगर्यां "छत्तगापपुरीए" छत्राग्रायां पुर्यां "महेसि त नंदणो राया" आसीत् तत्र नन्दणो नाम राजा इति गाथापञ्चकार्थः तस्मिन् नन्दनभवे हे भगवन् त्वया किं कृत

चउवीस वासलक्खे वसिय गिहे सुगुरुपोट्टिलसमीवे। निक्खमिय वासलक्ख खविय सया मासक्खमणेहिं
असय सेविय वीस ठाणे अज्जणिय तित्थयरनामं। वीसयराओ जाओ पाणय पुप्फुत्तरे देवो ॥८॥ युग्मम्,

व्याख्या—'चउवीसवासलक्खे वसिय गिहे' चतुर्विंशतिवर्षलक्षान् 'वसिय' इति उषित्वा 'गिहे' इति गृहस्थवासे तत 'सुगुरुपोट्टिलसमीवे निक्खमिय' सुगुरोः प्रधानगुरोः पोट्टिलनामाऽऽचार्यस्य समीपे 'निक्खमिय' इति निष्क्रम्य दीक्षां लात्वा 'वासलक्खं' वर्षलक्षं यावत् 'सया' निरन्तरं मासक्खमणेहिं मासक्षमणैः 'खविय' इति क्षपयित्वा अति पाप कोऽर्थो दीक्षां गृहीत्वा वर्षलक्षं यावत् सदा मासक्षपणानि कृतवान्, तत्र वर्षलक्षे कति मासक्षमणानि कति च पारणानि भवन्ति तदाह एकादशलक्षाः (११०००००) एकषष्ठिसहस्राः (६१०००) द्वे शते नवतिश्च उपरि च दशदिवसा एतावन्ति मासक्षपणानि एतावन्त्येव पारणानि प्रान्ते मासक्षपणे चत्वारिंशद्दिनानि संमाप्यन्ते कथमेतत् तत्र तत्करणविधिमाह वर्षस्य दिनानि षष्ट्यधिकानि त्रीणि शतानि भवन्ति, तानि लक्षेण गुण्यन्ते जातानि तिस्रः कोट्यः उपरि षष्टिलक्षाणि (३६००००००) दिनानां, ततो मासक्षपणदिनानि त्रिंशतानि ॥३००॥ पारणकदिन च एकम् इति भवति एकत्रिंशता भागे दत्ते पूर्वोक्त मानमायाति पुनः। नन्दनभवे किं कृतमित्याह 'असय सेविय वीस ठाणे' असकृत् वार वार सेवित्वा कानि विंशति स्थानानि अरहंत १ सिद्ध २ पवयण ३ इत्यादि गाथात्रयमध्यवर्तीनि श्रीआवश्यकसूत्रनिर्युक्तौ श्रीभद्रबाहुस्वामिकृतायां यानि प्रोक्तानि, पुनः किं कृत्वा 'अज्ज

त्थिअ तित्थयरनाम' अर्जयित्वा उपार्जयित्वा किं तीर्थंकरनामकर्म्म एतावता नन्दनभवे विंशति स्थानकतप आसेव्य तीर्थंकरनामकर्म बद्धवान्, प्रान्ते च मासिकीं सलेखनां श्रीआवश्यकलघुवृत्तिप्रोक्तां कृत्वा पञ्चविंशतिवर्षलक्षाणि सर्वायुः पालितवान्, इति पञ्चविंशतितमो भवः ॥२५॥ ततः "वीसयराओ जाओ पाणय पुप्फुत्तरे देवो" हे स्वामिन् ततस्त्वं प्राणते दशमे देवलोके पुष्पोत्तरनामविमाने देवो जातः किं विशिष्टस्त्वं 'वीसयराओ' विंशति अतराणि सागरोपमानि आयुर्यस्य स एवंविधो जातः इति षड्विंशतितमो भवः ॥ २६ ॥ अथ देवलोके स्थितानां भाविती र्थंकराणाम् अन्यदेवेभ्यो विशेषस्थितिमाहात्म्यमाह—

छम्मासवसेसाऊ पुन्नखए मोहमिंति इयरसुरा। आसन्नपुन्नपुंजा तित्थयरसुराओ दिप्पंति ॥ ९ ॥

व्याख्या—इतरे, अन्ये सुरा देवाः षण्मासावशेषायुष षण्मासे आयुरवशेषे सति पुण्यक्षये सति देवभवभोग्यकर्म्मणो ऽल्पत्वे सति 'मोह' अन्यथाभावम् "इति" प्राप्नुवन्ति, कथमित्याह—

माल्यम्लानि कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपराग ॥
दैन्यं तन्द्रा कामरागाङ्गभङ्गो, दृष्टेर्भ्रंशो वेपथुश्चाऽरतिश्च ॥१॥

इत्यादि तीर्थंकरसुरास्तु दीप्यन्ते अधिकं विराजन्ते यतः किं विशिष्टा 'आसन्नपुन्नपुंजा' आसन्नस्तत्सुतानां प्रासन्य पुण्यपुञ्जस्तीर्थंकरनामकर्मोदयरूपो येषां ते एवं श्रीमहावीरजीवदेवोऽपि एवं विधो दीप्यते स्म इत्यर्थः ॥ अथ

तीर्थंकरभवे गर्भावतार सविस्तार प्ररूपयन्ति—

माहणकुडग्गामे अवयरिओ सियआसाढ छट्ठीए । विप्पोसहदत्तगिहे देवाणदाइ उयरम्मि ॥ १० ॥

व्याख्या—हे देव त्वं ततः पुष्पोत्तरविमानाच्च्युतो ब्राह्मणकुण्डग्रामे विप्रस्य ऋषभदत्तस्य गृहे देवानन्दायास्तस्य भार्यायाः उदरे आषाढशुक्ल षष्ठ्यामवतीर्णः कस्मात् मरीचिभवे कुलमदकरणेन यत् नीचैर्गोत्रकर्म उपार्जितं, तस्य उदयात् तस्या उदरे यदा भगवान् अवतीर्णस्तदा उत्तराफाल्गुन्यां चन्द्रोऽभूत्, देवानन्दा च तस्यां रात्रौ चतुर्दशस्वप्नान् "गयवसहेत्यादि" चतुर्दशस्वप्नप्रमुखान् ददर्श, प्रातः सा देवानन्दा समर्थे कथयति स्म ऋषभदत्तेनापि प्रोक्तं तव उत्तमपुत्रो भविष्यति, इति गाथाभावार्थः ॥ १० ॥

अथ गर्भगते भगवति यज्जातं महाश्चर्यं तत् कथयन्ति—

अह वासीइ दिणंते चउदससुमिणेहि इंतजंतेहिं । हत्थुत्तरकयकल्लाणपणग अच्छरियचरिय तओ ॥११॥

जणनायनायखत्तिय पसिद्धसिद्धत्थपत्थिवपियाए । चेडगनिवभगिणीए तिसलादेवीइ कुच्छीए ॥१२॥

सक्कमणिएण हरिणेगमेसिणा गब्भविणिमय काउ । आसोयकसिणतेरसि निसाइ तं नाह साहरिओ १३

त्रिभिर्विशेषकम् व्याख्या—अह इति अथ गर्भावतारात् द्व्यशीति ८२ दिनान्ते चतुर्दशस्वप्नैर्हेतुभूतैः किं कुर्वद्भिः 'इंत जंतेहिं' त्रिशलाऽपेक्षया आगच्छद्भिर्मुखे प्रविशद्भिः, अथ देवानन्दापेक्षया गच्छद्भिर्मुखान्निष्क्रामद्भिः "हे हत्थु

सरकयकल्लाणपणग" हस्तोत्तरो यस्याः सा हस्तोत्तरा अश्विनीतो गणनया उत्तरदिशि वर्तमानत्वात् वा उत्तरफाल्गुनी तस्यां कृत कल्याणक कृतकल्याणक पञ्चक येन स तथा तत्सबोधन क्रियते हे हस्तोत्तराकृतकल्याणक पञ्चक पुन "हे अच्छरिअ चरिय" आश्चर्यभूतम् अग्रे वक्ष्यमाण गर्भापहारादिरूप चरित यस्य तस्य सबोधन क्रियते हे आश्चर्यचरित ततस्तस्माद् देवानन्दाया उदरात् ॥ ११ ॥ हे नाथ! त्व त्रिशलादेव्याः कुक्षौ हरणेगमेषिणा इन्द्रस्य पदात्यनीकाधिपतिदेवविशेषेण 'साहरिओ' सहृत प्रवेशितः किं विशिष्टायास्त्रिशला देव्याः "जणनाय नायख त्तियपसिद्धसिद्धत्य पत्थिवपियाए" जने लोके ज्ञाता विख्याता जनज्ञातास्ते च ते ज्ञाता ज्ञातवंशोद्भवाः क्षत्रियाः तेषु प्रसिद्धो यः सिद्धार्थपार्थिवः तस्य प्रिया तस्याः, पुनः किं विशिष्टायास्त्रिशलादेव्या "चेडगनिवभगिणीए" चेटकनामनृपस्य भगिन्याः ॥ १२ ॥ किं विशिष्टेन हरिणेगमेषिणा "सक्कभणिएण" शक्रभणितेन इन्द्रादिष्टेन किं कृत्वा "गब्भविणिमय काउ" गर्भपरावर्तं कृत्वा त्रिशलाया गर्भस्थां कन्यां देवानन्दाकुक्षौ विक्षिप्य इत्यर्थः, कस्यां वेलायां "आसोअकसिणतेरसिनिसाइ" आश्विनमासकृष्णत्रयोदश्यां रात्रौ इति गाथात्रयार्थः ॥ १३ ॥ अत्रावसरे भगवति गर्भस्थे सति सप्तमासेषु गतेषु भगवता चिन्तित मयि चलनादि कुर्वति मा मातुर्दुःख भावि ततः सलीनता कृता तदा मात्रादिना महान् दुःखविलापः कृतः, पुनर्भगवता अवधिज्ञानेन तत् स्वरूप विज्ञाय अङ्गादिस्फुरण कृतं तदा महान् आनन्दमहोत्सवो जातः, तस्मिन्-प्रस्तावे भगवता अभिग्रहो गृहितो यथा अह मातृपित्रोर्जीवतोर्न

श्रमणो भविष्यामीति, इत्यादि सम्बन्ध आवश्यकाद्यनुसारेण वाच्यः अथ भगवतो जन्मकल्याणक कथ्यते—

खत्तियकुंडग्गामे जाओ चित्तसियतेरसिनिसद्धे । कासवगुत्ते कणगाभो कन्नरासीअ सीहंको ॥ १४ ॥

व्याख्या—हे देव त्वं जातो गर्भान्निष्क्रान्तो जनित इत्यर्थः कस्मिन् ग्रामे क्षत्रियकुण्डग्रामे कस्मिन् समये चैत्रशुक्लत्रयोदशीनिशाया अर्धे अर्द्धरात्रिसमये कस्यां राशौ कन्याराशौ कस्मिन् गोत्रे काश्यपगोत्रे किं विशिष्टो भगवान् कनकाभः स्वर्णवर्णः पुनः किं विशिष्टः सिंहाङ्कः सिंहलाञ्छनः ॥ १४ ॥ अथ भगवतो नामकरण दर्शयन्ति—

जणचिंतामणि तुमए अवइन्ने रयणजणधणकणेहिं । वड्ढित्था नायकुल ति वद्धमाणोत्ति त सि फुड १५

व्याख्या—हे जिन ! त्वयि अवतीर्णे सति ज्ञातकुल रत्नजनधनधान्यैः अवार्धिष्ट वर्द्धित किं विशिष्टे त्वयि जनचिन्तामणौ जनेषु लोकेषु चिन्तामणिरिव चिन्तामणिर्मनोवाञ्छितपूरणात् तस्मिन् इति हेतोर्मातृपितृभिर्वर्द्धमान इति दत्तनामा त्वमसि स्फुट प्रकटम् इति गाथार्थ ॥ १६ ॥ अथ भगवतो देवै कृत द्वितीय नाम प्ररूपयन्ति—

त जम्मसज्जणखणम्मि सक्क कुवियप्प सक्कु मुक्खणिउ । जेण महतम मगिरिमीरिरय तओ महावीरो १६

व्याख्या—हे जिन येन कारणेन महान्तम् अवगिरिं मेरुपर्वत "ईरित्थ" ईरयामासिथ कम्पयामासिथ तत्कारणात् देवैः कृतसार्थक नाम महावीर इति किं कर्तुं "सक्क कुविअप्पसक्कु उक्खणिउ" शक्रस इन्द्रस्य कुविकल्पः कथ लघुशरीरो भगवान् सुरकलशस्नात्रपानीयानि सहिष्यति इत्येव रूपः स एव शङ्कुः कीलस्त उत्खनितु कस्मिन् प्रस्तावे

"जन्ममजम्मन खणम्मि" जन्ममहोत्सवप्रस्तावे इति गाथार्थः ॥ १६ ॥ अत्रान्तरे अष्टवर्षीयस्य भगवत आमलकी-क्रीडा १ साधिकाष्टवर्षीयस्य लेखकशालानयनम् इन्द्रव्याकरण २ यौवने समरराजसुतायाः यशोदायाः पाणिग्रहण ३ चेत्यादि सर्व चाप्रसिद्धत्वान्नात्र कथितं, परं स्वयं वाच्यम् अथ भगवतो गृहावस्थाने कारणमाह—

पियमरणे पि त जिट्ठभाउवयणेण ठासी वासदुग । गिहवासे च्चिय निरवज्ज वित्तिणा निच्छियमुणिव्व

व्याख्या—हे जिन त्वं जन्मतोऽष्टाविंशे च वर्षे पित्रोर्मातापित्रोर्मरणेऽपि जीवतोर्मातापित्रोर्नाहं दीक्षां ग्रहीष्यामि इत्यभिग्रहपूरणेऽपि वर्षद्वयं गृहवासे एव अस्था' किंचित् निरवद्य वृत्त्या निरारम्भप्रवृत्त्या निश्चितमुनिवत् महामुनिवत् केन "जिट्ठभाउवयणेण" भगवतो ज्येष्ठो भ्राता नन्दिवर्द्धननामा राजा तस्य वचनेन माग्रहेण ॥ १७ ॥ अथ भगवतो दीक्षाकल्याणक कथयन्ति—

सत्तकरदेह गेहमि अच्छिउं तीससवच्छरे कुमरो । लोगतियतोरविओ सवच्छरमिच्छिय दाउ ॥ १८ ॥

सुरनरवइ कय बहुविह जलह्वणो सुरविलेवणविलित्तो । रुइरालकारधरो चउदेवनिकायसमणुगओ १९

चंदप्पहासिबियाए मग्गसिरे कसिणदसम्मि अवरह्ने । पढमे वए पव्वइओ छट्ठेणं नायसंडवणे ॥२०॥

तिसृभि कुलकम् व्याख्या—हे जिन ? त्वं प्रथमे वयसि प्रधाने यौवने वयसि "पव्वइओ" प्रव्रजित एकाकी सन् गृहस्थधर्मान्निर्गतो दीक्षां जग्राह इत्यर्थः, "हे सत्तकरदेह" हे सप्तहस्तप्रमाणशरीर किं कृत्वा "तीससवच्छरे गेहमि

अतियउ" त्रिंशद्वर्षाणि गृहे स्थित्वा किं विशिष्टस्त्व कुमारोऽनाप्तराज्यत्वात् कुमारः सन् पुनः किं विशिष्टस्त्वं "लोगतिय तोरविओ" लोकान्तिकैः पञ्चमदेवलोके कृष्णराज्यन्तर्गतविमानवासिभि सारस्वतादिभिर्देवैः "तोरविओ" प्रेरितो दीक्षार्थं प्रोत्साहितः पुन किं कृत्वा "सवच्छरमिच्छियं दाउ" त्रिंशत्तमे वर्षे वर्षं यावत् ईप्सित दान दत्त्वा तत्र प्रतिदिन दानमान यथा एका हिरण्यस्य कोटी अष्टौ च लक्षाः वर्षदानमानं यथा त्रीणि कोटीशतानि अष्टा शीतिकोट्य अशीतिश्च लक्षा एतच नियत दानम् अनियत तु धनकनकसुवर्णरत्नमणिगजाश्वादि यद् येन वाञ्छित तत् तस्मै दत्त इद दानम् आवश्यकाभिप्रायेण प्रातराशं प्रातर्भोजनकाल यावत् ज्ञातायां तु "जावमागहओपायरासो त्ति" वचनात् मगधदेशसम्बन्धिन प्रातराश प्राभातिक भोजनकाल यावत्प्रहरद्वयादिकमित्यर्थः, तथा ज्ञातायां पूर्वं सवत्सरदान पश्चाल्लोकान्तिकदेवप्रतिबोधनम्, अन्यत्र तु पूर्वं लोकान्तिकदेवप्रतिबोध पश्चात्सवत्सरदान, विस्तरचर्चा तु श्रीहारिभद्रतोऽवसेया, किं विशिष्टस्त्व "सुरनरवइकयचउविह जलह्वणो" सुरपतिभिरिन्द्रैर्नरपतिभिश्च राजभि कृत चतुर्विध चतुःप्रकारं तीर्थजलैर्गङ्गादिपानीयै स्नपन स्नान यस्य सः, पुनः किं विशिष्टस्त्व "सुरविलेवणविलित्तो" सुर विलेपनेन दिव्यचन्दनादिना विलिप्तमर्चितगात्र पुनः किं विशिष्टस्त्व "रुइरालकारधरो" रुचिरान् मनोहरान् अलङ्कारान् मुकुटकुण्डलहारादीन् धरतीति रुचिरालङ्कारधरः, पुनः किं विशिष्टस्त्व "चउदेवनिकायसमणुगओ" चतुर्विधाना भवनपति व्यन्तरज्योतिष्कवैमानिकानां देवानां निकायैः समूहै समनुगतः परिवृतः पुनः कीदृशस्त्व

"चन्दप्पहासिबिआए" चन्द्रप्रभानाम्यां शिबिकायां सहस्रजनवाह्यायां विमानाकारायां राजवाहनविशेषरूपायां समारूढ इति शेषः। तस्या प्रमाण तु यथा पञ्चाशद्धनूंपि दीर्घा, पञ्चविंशति धनूंपि विस्तीर्णा, षट्त्रिंशद्धनूंपि उच्चा कस्मिन् काले इत्याह मार्गशीर्षमासे कृष्णदशम्या चतुर्थप्रहरे कस्मिन् स्थाने ज्ञातखण्डे वने केन तपसा षष्ठेन इति गाथात्रयार्थः तदा दीक्षायां गृहीतायां भगवतश्चतुर्थं मनःपर्यवज्ञान समुत्पन्न तथा दीक्षाग्रहणानन्तरम् इन्द्रेण भगवतो वामस्कन्धे देवदूष्य वस्त्र समर्पित भगवांस्तु तदेव पितृमित्राय सोमनाम्ने द्विजाय प्रतियाचमानाय अनुकम्पया स्फाटयित्वा अर्द्धं ददौ, अन्यत्तदर्द्धं तु सावरणधर्मव्यवस्थापनार्थं स्वस्य स्कन्धे एव अस्थापयत् २० ततो भगवतो विहार कुर्वतः प्रथमरात्रौ यज्जात तत् कथयन्ति—

कुम्मारग्गामवाहिं वयपढमनिसाइ एइ किर सक्को। वारइ गोव वागरइ निरुवसग्ग करे भते ॥ २१ ॥
तमणिच्छिय तुह निच्छियमइणो विहरति कुल्लायग्गामे। बलभवणे बीयदीणे पारणय पायसेण सि ॥२२॥

युग्मम् व्याख्या—"कुम्मारग्गामवाहिं" कूर्मारग्रामाद् बहिः स्वामी व्रतस्य प्रथमनिशाया स्थितः, तत्र "एइ" आगच्छति किल इत्यासोक्तौ शक्र इन्द्रो वारयति गोपाल व्याकरोति विज्ञपयति च हे भदन्त त्वां निरुपसर्गं करोमि द्वादशवर्षाणि तव उपसर्गा भविष्यन्ति तान् वारयामीति, अत्र गोपालेन यः प्रथममुपसर्गः कृतस्तत् सम्बन्धलेशो लिख्यते, तथाहि श्रीवीरो दीक्षां गृहीत्वा विहार कृत्वा जलमार्गं स्यक्त्वा पल्लीमार्गेण दिवसस्य मुहूर्ते शेषे सति

कूर्म्मारग्रामस्य समीपे रात्रौ कायोत्सर्गे स्थितः तत्र एको गोपो दिवसे वाहान् वाहयित्वा सन्ध्यायाम् एतत्सीम्नि एते चरन्तीति कृत्वा गोदोहार्थं ग्रामे गतः प्रत्यागतश्च तान् अपश्यन् स्वामिनमाह भो क्व ते गताः, स्वामी मौनित्वान्न वक्ति, ततो गोपो रात्रौ गवेषयन्नपि तान् अप्राप्नुवत् प्रातर्भ्रान्त्वा तत्रैवागतवान् दृष्ट्वा वक्ति, रे पाखण्डिन् ? मया ज्ञातं यत् एतान् वृषभान् गृहीत्वा अहं यास्यामीति प्रच्छन्नं त्वया स्थापिताः ततो रुषाक्रान्तो दामनं गृहीत्वा यावद् भगवतस्ताडनार्थम् उद्यतस्तावत् तं गोपम् इन्द्रः स्तम्भयामास बभाषे च रे सिद्धार्थपुत्रम् अत्र प्रव्रजितं न जानासीति दूरीकृत इति ॥ २१ ॥ "तमणिच्छियत्ति" तत् इन्द्रवचनम् अनीप्सित्वा अमानित्वा यतस्तीर्थंकराः परसाहाय्यं न गृह्णन्ति इति ते तव निश्चितमतेर्विहारं कुर्वतः कोल्लाक ग्रामे बलनाम्नो ब्राह्मणस्य आवश्यकादौ तु बहुलब्राह्मणस्य भवने गृहे दीक्षादिनात् द्वितीयदिवसे प्रथमं पारणकं पायसेन परमान्नेन मधुघृतसंयुक्तेन तव आसीत् तच्च पारणं भगवता सपात्रधर्मज्ञापनार्थं काश्यपात्रे एव कृतं, ततः परं यावज्जीवं पाणिपात्रो भगवान् बभूव इति गाथाद्वयार्थं अथ अनुकूलान् प्रतिकूलांश्च उपसर्गान् भगवतः कथयन्ति—

सुरकयविलेवणाइ वि साहिय चउमासिमासि ते दुहय । भमराइकयत्थणतरुणपत्थाणत्थी जणरयणओ

व्याख्या—हे स्वामिन् ? दीक्षा प्रस्तावे सुरैर्देवैः कृतं विलेपनाद्यपि ते तव साधिकं शेषकालसम्बन्धिनीं चतुर्म्मासीं दुःखदायकमासीत् यत् विलेपनादिकं सुखकारकमेव भवति तदपि दुःखदायकं जातं तत्र हेतुत्रयमाह "भमराइकयत्थण"

"चदप्पहासिबिआए" चन्द्रप्रभानाम्न्यां शिबिकायां सहस्रजनवाह्यायां विमानाकारायां राजवाहनविशेषरूपायां समारूढ इति शेषः। तस्याः प्रमाण तु यथा पञ्चाशद्धनूंपि दीर्घा, पञ्चविंशति धनूंपि विस्तीर्णा, षट्त्रिंशद्धनूंपि उच्चा कस्मिन् काले इत्याह मार्गशीर्षमासे कृष्णदशम्यां चतुर्थप्रहरे कस्मिन् स्थाने ज्ञातखण्डे वने केन तपसा षष्ठेन इति गाथात्रयार्थः तदा दीक्षायां गृहीतायां भगवतश्चतुर्थं मनःपर्यवज्ञान समुत्पन्न तथा दीक्षाग्रहणानन्तरम् इन्द्रेण भगवतो वामस्कन्धे देवदूष्य वस्त्र समर्पित भगवांस्तु तदेव पितृमित्राय सोमनाम्ने द्विजाय अतियाचमानाय अनुकम्पया स्फाटयित्वा अर्द्धं ददौ, अन्यत्तदर्द्धं तु सावरणधर्मव्यवस्थापनार्थं स्वस्कन्धे एव अस्थापयत् २० ततो भगवतो विहार कुर्वतः प्रथमरात्रौ यज्जात तत् कथयति—

कुम्मारग्गामबाहिं वयपढमनिसाइ पड़ किर सक्को। वारइ गोव वागरइ निरुवसग्ग करे भते ॥२१॥

तमणिच्छिय तुह निच्छियमइणो विहरति कुल्लायग्गामे। वलभवणे बीयदीणे पारणय पायसेण सि ॥२२॥

युगम् व्याख्या—"कुम्मारग्गामबाहिं" कूर्मारग्रामाद् बहिः स्वामी व्रतस्य प्रथमनिशायां स्थितः, तत्र "पइ" आगच्छति किल इत्यासोक्तौ शक्र इन्द्रो वारयति गोपाल व्याकरोति विज्ञपयति च हे भदत त्वां निरुपसर्गं करोमि द्वादशवर्षाणि तव उपसर्गा भविष्यन्ति तान् वारयामीति, अत्र गोपालेन यः प्रथममुपसर्गः कृतस्तत् सम्बन्धलेशो लिख्यते, तथाहि श्रीवीरो दीक्षां गृहीत्वा विहार कृत्वा जलमार्गं त्यक्त्वा पल्लीमार्गेण दिवसस्य मुहूर्त्ते शेषे सति

चण्डकोशिकसर्प्पदृष्टान्तो, यथा स सर्पो दृग्विषो रोषेण लोभेण च यन सर्वतस्त्रिप्रदक्षिणी कुर्व्वन् पशुपक्षिमनुष्या दृष्ट्वा पश्यति स दृशा ज्वालयति, तत्र पूर्वं तापसा एव ज्वालिता अर्द्धदग्धाश्च केचिन् नष्टास्ततस्तेन स्वामी दृष्ट स्तथापि न दग्धः एवं त्रिःकरणेऽपि न दग्धस्ततो दशति अपक्रामति च कथं मा ममोपरि पतिष्यतीति त्रिर्दशनेऽपि न मृतस्ततो भगवन्मुखं विलोकयन् निर्विषो जात, ततः स्वामिना प्रोक्त रे चण्डकोशिक उपसम कुरु ततो जातिस्मरणज्ञानात् भक्त प्रत्याख्यातवान् ततो भगवन्त प्रदक्षिणी कृत्य बिले मुख क्षिप्त्वा अनशनेन तस्थौ, ततो गोप्यो भगवन्त दृष्ट्वा आर्द्रवल्लीवेष्टिताङ्गा आयान्ति स सर्प्प विलस्थ दृष्ट्वा पाषाणैर्लकुटैश्च सघट्टयन्ति तथापि सर्प्पो न चलति, ततो गोपिकाभिः पूजा कृता ततोऽर्द्धमासिकेन अनशनेन मृत्वा सहस्रारे अष्टमदेवलोके समुत्पन्न इति ॥ अथ सगमनाम्ना अभव्यदेवेन कृतान् उपसर्गान् कथयन्ति—

एगरयणीइ वीस छेहिँ मासेहिँ विविहउवसग्गे। तुह करिय हरियसुरसग्गसगमो सगमो जाओ ॥२५॥

व्याख्या—हे स्वामिन् संगमो देवस्तव उपसर्गान् कृत्वा "हरियसुरसग्गसगमो जाओ" कोऽर्थ इतो निवारित इन्द्रेण सुराणां स्वर्गस्य च सगम सयोगो यस्य सः कदा कति उपसर्गास्तेन कृता इत्याह "एगरयणीइ वीस एकस्यां" रात्रौ विंशतिरुपसर्गाः कृतास्ते चामी धूली १ पिपीलिका २ वाल्मीकयः ३ घृतेल्लिका ४ वृश्चिक ५ नकुल ६ सर्प ७ मूषक ८ हस्ति ९ हस्तिनी १० पिशाच ११ व्याघ्र १२ सिद्धार्थ १३ त्रिशला १४ सूपकार १५ चाण्डाल १६ खरवात

इत्यादि विलेपनसौरभ्येन ये आकृष्टा आगता भ्रमरास्तैः कदर्थनं कृत १ पुनर्ग्राम्यतरुणैर्विलेपनस्य प्रार्थना कृता २ पुनस्तरुणस्त्रीजनेन अभ्यर्थना कृता यदुत त्वम् अस्माकं पतिर्भवेति ३ गाथार्थः अथ साधिकमाससहितात् वर्षादूर्ध्वं दक्षिणवाचालस्य आसन्ना सुवर्णकूला नाम्नी नदी वर्तते तस्यास्तटे तरुकण्टके तद्देव देवदूष्यवस्त्रार्द्धं विलिग्नं पतितं भगवान् तदा सिंहावलोकनेन तद्वस्त्रम् अद्राक्षीत्, तस्य अवलोकने हेतुत्रयमाह भगवतो ममता जाता इत्येके १ स्थण्डिले प्रासुकस्थाने पतितम् अस्थण्डिले वा इत्यन्ये २ सहसाकारेण इत्यन्ये ३ तत कण्टके लग्न वस्त्र दृष्ट्वा भगवता विचारित मम सन्तानस्य कषायबाहुल्यात् कण्टकत्वं भविष्यति निर्ममतया च तद्वस्त्र भगवान् न पुनः जग्राह, ततः पर भगवान् अचेलको वस्त्ररहितो बभूव कण्टकलग्न च तद्वस्त्र तेनैव सोमद्विजेन लज्जया पुनर्याचितुमशक्नुवता भगवतो वर्षं यावत् पृष्ठौ भ्रमता गृहीतम् इति सम्प्रदायः ॥ अथ प्रथमचतुर्मासात् प्रारभ्य प्रतिकूलोपसर्गान् प्रतिपादयन्तो भगवतश्चरित्र कथयन्ति—

पडिकूलसूलपाणिं चडकय चण्डकोसियमहिं च। अगणिय णियतणुपीड पडिबोहिअव्व तुम भयव २४

व्याख्या—यक्षप्रासादे स्वामी अर्धमासिकतपसा प्रथम चतुर्मासीं स्थित, तत्र प्रतिकूल शूलपाणियक्ष भ्रान्तिनाम्ना प्रसिद्ध त्व प्रतिबोधितवान् पुनः "चण्डकृत क्रूरकर्माणं चण्डाकृतिं वा चण्डकौशिकं अहिं सर्पं हे भगवन् ! त्व प्रतिबोधितवान् . किं कृत्वा निजतनपीडां स्वकीयदेहव्यथां अगणयित्वा इति गाथार्थः ॥ २४ ॥ अथ

चण्डकोशिकसर्प्पदृष्टान्तो, यथा स सर्पो दृग्विषो रोषेण लोभेण च वन सर्वतस्त्रिप्रदक्षिणी कुर्व्वन् पशुपक्षिमनुष्याः दिक य पश्यति स दृशा ज्वालयति, तत्र पूर्वे तापसा एव ज्वालिता अर्द्धदग्धाश्च केचिन् नष्टास्ततस्तेन स्वामी दृष्टि-सूर्योन्मुखस्यापि न दग्धः एव विक्षिकरणेऽपि न दग्धस्ततो दशति अपक्रामति च कथ मा ममोपरि पतिष्यतीति एव त्रिश्चिदशनेऽपि न मृतस्ततो भगवन्मुख विलोकयन् निर्विषो जातः, ततः स्वामिना प्रोक्त रे चण्डकौशिक उपशम कुरु ततो जातिस्मरणज्ञानात् भक्त प्रत्याख्यातवान् ततो भगवन्त प्रदक्षिणी कृत्य बिले मुख क्षिप्त्वा अनशनेन तस्थौ, ततो गोप्यो भगवन्त दृष्ट्वा आर्द्रपठीयेष्टिताङ्गा आयान्ति त सर्प्प बिलस्थ दृष्ट्वा पाषाणैर्लकुटैश्च सघट्टयन्ति तथापि सर्प्पो न चलति, ततो गोपिकाभि पूजा कृता ततोऽर्द्धमासिकेन अनशनेन मृत्वा सहस्रारे अष्टमदेवलोके समुत्पन्न इति ॥ अथ सगमनाम्ना अभव्यदेवेन कृतान् उपसर्गान् कथयन्ति—

एगरयणीइ वीस छेहिँ मासेहिँ विविहउवसग्गे। तुह करिय हरियसुरसग्गसगमो सगमो जाओ ॥२५॥

व्याख्या—हे स्वामिन् संगमो देवस्तव उपसर्गान् कृत्वा "हरियसुरसग्गसगमो जाओ" कोऽर्थः हतो निवारित इन्द्रेण सुराणा स्वर्गस्य च सगम' सयोगो यस्य स कदा कति उपसर्गास्तेन कृता इत्याह "एगरयणीइ वीस एककस्यां" रात्रौ विंशतिरुपसर्गाः कृतास्ते चामी धूली १ पिपीलिका २ वाल्मीकयः ३ घृतेलिका ४ वृश्चिक ५ नकुल ६ सर्प ७ मूषक ८ हस्ति ९ हस्तिनी १० पिशाच ११ व्याघ्र १२ सिद्धार्थ १३ त्रिशला १४ सूपकार १५ चाण्डाल १६ खरवात

१७ फलकलिकावात १८ फालचक्र १९ प्रभातविकुर्वणा रूपाः २० पुनस्तदनु पण्मासान् यावत् विविधान् नाना प्रकारान् अनेपणीयादीन् उपसर्गान् कृत्वा ॥ संगमकस्य स्वर्गनिष्कासनव्यतिकरस्तु अथ सङ्गमक इन्द्र सामानिको महर्द्धिको देव इन्द्रेण स्वर्गान्निष्कासितः सन् वधूभिः परिवारितो यानिकविमानमारुह्य मन्दरचूलिकायामागत्य तस्थौ तस्य शेषाः सुराः शक्रेण निषिद्धाः स्वर्गे एव तस्थुः तस्य द्वे सागरोपमे आयुषी पर तस्मिन् समये एक सागरोपम अतिक्रान्तमेक तु सागरोपम शेषमभूत् सङ्गमकृतोपसर्गानन्तरम् आलम्भिकायां विद्युत्कुमारो हरिकान्तो जिनस्य भक्त्या वन्दित्वा भणति हे भगवन् १ प्रिय पृच्छामि जिता उपसर्गा इति स्तोकमवशेषं तिष्ठति १ पुनः कौशाम्ब्या चन्द्रसूर्यौ समागत्य सुख प्रिय पृच्छतः स्म २ पुनर्वाणारस्यां शक्रःप्रिय पृच्छति स्म ३ पुनः श्रीराजगृहे ईशानेन्द्रः प्रिय पृच्छति स्म ४ पुनर्मिथिलायां धरणेन्द्रः प्रिय पृच्छति स्म ५ ॥ २५ ॥ अथ भगवतो गोपेन कृत मुपसर्गं कथयन्ति—

कन्नेसु कडसिलागापवेसगे अभिनिवेसगे गोवे । खरगे य तदुद्धरगे तुह तुल्ला चेव मणवित्ती ॥ २६ ॥

व्याख्या—हे स्वामिन्! तव मनोवृत्तिर्मनसो ऽध्यवसायः गोपे च पुनः खरकाऽऽख्ये वैद्ये च तुल्या एव समान एव जाता नच गोपे द्वेषो नापि च खरके रागः किं विशिष्टे गोपे 'कन्नेसु कडसिलागा पवेसगे' कर्णयोः कटशला काप्रवेशके काष्ठशलाकाप्रक्षेपके पुन किं विशिष्टे 'अभिनिवेसगे' कोपेन सहिते मिथ्यात्विनि अथ किं विशिष्टे

खरके 'तदुद्धरणे' तस्याः शलाकाया उद्धारके अत्राय सम्बन्धः एकदा भगवान् विहरन् मध्यमपापायां ॥ तत्र

सिद्धार्थो नाम एको वणिक् वर्त्तते तस्य गृहे भगवान् गत, तस्य सिद्धार्थवणिज खरको नाम वैद्यो मित्रं वर्त्तते तौ द्वावपि सिद्धार्थगृहे तिष्ठतः स्वामी च भिक्षार्थं प्रविष्टः सिद्धार्थो वन्दते स्तवीति च वैद्यस्तीर्थंकर दृष्ट्वा भणति अहो भगवान् सर्वलक्षणसंपूर्णः परं सशल्यो दृश्यते ततः सिद्धार्थः सम्भ्रान्तः सन् भणति विलोकय कुत्र शल्यमस्ति तेन दृष्टं कर्णयो, ततः स्वामी उद्याने गत्वा कायोत्सर्गे स्थितः ततः औषधानि गृहीत्वा सिद्धार्थवैद्यौ गतौ भगवत्समीपे ततो भगवान् तैलद्रोण्यां स्थापितो मर्दितश्च ततो बहुभिर्मनुष्यैर्यन्त्रित आक्रान्तश्च पश्चात्संदंशकेन गृहीत्वा शल्योद्धारः कृतो, भगवता राटिर्मुक्ता मनुष्यांश्च उत्पाट्य उत्थितः महाभैरवमुद्यानं जातं पश्चात् संरोहणी औषधी दत्ता भगवतः समाधिर्जातः, सिद्धार्थो वणिक् खरकवैद्यश्च द्वावपि देवलोकं गतौ गोपालस्तु सप्तमनरकपृथिव्यां गतः, पुनरत्र गोशालकमिलनात् प्राक् कटपूतना व्यन्तर्यापि उपसर्गः कृतस्तथाहि एकदा भगवान् शालीशीर्षग्रामे उद्याने कायोत्सर्गे स्थितोऽभूत्, मासश्च माघमासस्तदा त्रिपृष्ठवासुदेवेन या अन्तःपुरी अपमानिता अभूत्, सा व्यन्तरी जाता तया तापसीरूपं कृत्वा जलभृताभिर्जटाभिरन्ये असह्योपसर्गोऽकारि उपसर्गप्रान्ते स्तुतिश्च, तद्वेदनां सहमानस्य भगवतः षष्ठेन तपसा विशुद्धमानस्य लोकावधिज्ञानं समुत्पन्नं पुनरपि गोशालादिकृता उपसर्गा अत्र वाच्याः, उपसर्गमध्ये कटपूतनाकृतोपसर्गो जघन्यः १ कालचक्रोपसर्गो मध्यमः २ शल्योद्धारोपसर्ग उत्कृष्टः ३

स्थिता उपसर्गा ॥ अथ भगवतः तपः सङ्ख्यां कथयन्ति—

छचउतिदुगेगमासे एगनवदुछक्कयारस अ कासी । अड्ढदिवड्ढाई अ मासे बावत्तरी दो दो ॥ २७ ॥

व्याख्या—हे स्वामिन् त्वं एकं पाण्मासिकं तपोऽकार्षीः कृतवान्, एवं नव चतुर्मासिकान्, द्वे त्रिमासिके, षट् द्विमासिकान् द्वादश तु एकमासिकान्, पुनः द्वासप्तति-अर्धमासिकान् पक्षक्षपणान्, द्वे सार्धमासिके द्वे अर्द्धतृतीयमासिके च अकार्षीः ॥ २७ ॥ पुनरपि—

दु चउ दस दिणा पडिमा भद्द महाभद्दसव्वओ भद्दा । कासी अच्छिन्ना तह बारसेग राईं ति देवसियो ॥२८

व्याख्या—हे स्वामिन् त्वं द्विदिनां द्विदिनप्रमाणां भद्रनाम्नीं प्रतिमाम् अकार्षीः कृतवान्, तस्यां प्रतिमायां क्रियमाणायां प्रथमदिने पूर्वाभिमुखः चतुःप्रहरान् कायोत्सर्गेण स्थीयते, पश्चात् रात्रौ दक्षिणाभिमुखं स्थीयते, पुनर्दिने पश्चिमाभिमुखः, रात्रौ उत्तराभिमुखः, चतुःप्रहरान् चतु प्रहरान् दिशं दिशं प्रति कायोत्सर्गेण स्थीयते, एवं दिनद्वयेन षष्ठतपसा च पूर्यन्ते १ पुनश्चतुर्दिनप्रमाणां महाभद्रप्रतिमाम् अकार्षीः, तस्यां क्रियमाणायां एकैकस्यामेकैकस्यां पूर्वादिदिशि एकैकम् एकैकम् अहोरात्रं कायोत्सर्गेण स्थीयते, एषा प्रतिमा दशमेन उपवासचतुष्टयेन संपूर्णा भवति ॥२१॥ पुनस्त्वं दशदिनप्रमाणां सर्वतो भद्रनाम्नीं प्रतिमां कृतवान्, तस्यां प्रतिमायां क्रियमाणायां पूर्वादिदशस्वपि दिक्षु एकैकम् अहोरात्रं कायोत्सर्गेण स्थीयते, तत्रापि यदा ऊर्ध्वादिदिशमाश्रित्य कायोत्सर्गः क्रियते तदा ऊर्ध्वलोकव्यवस्थि-

तान्येव कानिचिद् द्रव्याणि सध्यायति यदा तु अधो दिशमाश्रित्य कायोत्सर्गः क्रियते तदा अधो लोकव्यवस्थि तान्येव कानिचित् द्रव्याणि सध्यायति, एषा प्रतिमा द्वाविंशति मक्तेन दश दिने संपूर्णा भवति ३ एताः प्रतिमा अच्छिन्नाः कृता अन्तराले पारण न कृत, प्रतिमात्रय सपूर्णं जात तदा पारण भगवत आनन्दगृहे जात, पुन हे भगवन्! त्व त्रिदैवसिक्येकरात्रिकी रन्या प्रतिमा द्वादश कृतवान्, तस्यां क्रियमाणायां एकैकस्यां प्रतिमायां दि नत्रय लगति तत्र सर्वत्र तृतीयदीने अष्टमस्य अन्ते अन्त्या रात्रि कायोत्सर्गेण अतिक्रामति ॥ २८ ॥

पचदिणूणछम्मासियखमण कोसबिए तुमम कासी। वुच्चिसए गुणतीसे अ कासी त छट्ठखमणाण ॥२९

व्याख्या—हे भगवन्! त्व कोशाम्ब्या नगर्यां पञ्चदिनोन षण्मासिक तपोऽकार्षी, तथा पुनरपि त्व षष्ठक्षपणानां द्वे शते एकोनत्रिंशदधिके ऽकार्षीः इति गाथार्थः, पञ्चदिनोनषाण्मासिकतपः पारणे चन्दनबालया प्रतिलाभितो भगवान्, तत्सम्बन्धो यथा-एकदा भगवता पोषकृष्णप्रतिपद्दिने एष विधो ऽभिग्रहो गृहीतो यथा—

दव्वओ कुम्मासा सुप्पकोणेण १। खेत्तओ एलुग विक्खभइत्ता २। कालओ नियत्तेसु भि क्खायरेसु ३। भावओ जहा रायधूया दासत्तण पत्ता नियडबद्धा मुण्डियसिरा रोवमाणी अट्ठमभत्तिया जइ दलस्सइ तओ पारेमि इति ४।

व्याख्या—एवम् अभिग्रह गृहीत्वा भगवतः परीषहसहनार्थं गोचरचर्यां हिण्डतश्चत्वारो मासा जाता, गतः

कौशाम्ब्यां, तत्र शतानीको राजा मृगावती राज्ञी विजया नाम्नी तस्याः प्रतिहारी तथा यादीनामधर्मपाठकः सुगुप्तो मन्त्री नन्दा नाम्नी तस्य भार्या श्राविका मृगावत्याश्च सा वयस्या, स्वामी नन्दागृहे गतः प्रासुकान्नदाने ऽपि भग पान् न लब्धौ ततो दासीभिः प्रोक्तम् अय प्रत्यह आगत्य आगत्य याति पर न लाति, ततस्तस्या अधृतिर्जाता मा भभिग्रहो भावी, ततो नन्दया स्वपतिर्मन्त्री उक्तः स्वबुद्धिविज्ञानेन चेदभिग्रहो ज्ञायते तदा भगवतः पारण का-र्यते, तस्मिन् प्रस्तावे मृगावत्याः प्रतिहारी विजया तत्र समागता ऽभूत्तया गत्वा मृगावत्याः प्रोक्त मृगावत्या जात विषादया राज्ञः शतानीकस्य प्रोक्त शतानीकेन सत्यवादी धर्मपाठक पृष्टो, भो यदि त्वम् अभिग्रहान् जानासि तर्हि वद कीदृशास्ते कति भेदाश्च ते भवन्ति—सो ऽपि धर्मशास्त्र विचार्य उक्तवान् द्रव्यक्षेत्रकालभावादिका अनेके अ भिग्रहाः सन्ति स्वामिना कीदृशोऽभिग्रहः कृतः को भगवतो ऽभिप्रायो मया न ज्ञायते, ततो येऽभिग्रहा उक्तास्तेन विधिना नन्दया आहारो दत्तः पर स्वामी न लाति ततो बहुविषाद प्राप्तः, एतस्मिन् प्रस्तावे शतानीकेन राज्ञा वेडीमार्गेण एकया रात्र्या आगत्य चम्पानगरी भग्ना सेनाचरैर्लुण्ठिता यथेच्छम्' एव सति केनचित् पदातिना धारिणी चन्दना पुत्री सहिता धृता आनीता च कौशाम्ब्यां, सभार्या धारिणीं करिष्यामि इति वचनं श्रुत्वा धारिणी मार्गे एव प्राणान् मुमोच चन्दनाया प्रोक्त मा त्व म्रियेथाः त्वां भगिनीं करिष्यामि ततो जीवन्ती स्थिता, ततः पदातिना विक्रीता धनावहश्रेष्ठिना गृहे समानीता ततः तत्र भार्या मूला चन्दनार्थम् आगता तस्मिन् समये चन्दना श्रेष्ठि

पादौ प्रक्षालयन्ती श्रेष्ठिनी चन्दनां केशरचनातत्परां पश्यति स्म, ततो मूलया मत्सरेण शिरो मुण्डयित्वा पादयोर्नि गडौ बध्वा अपवरिकामध्ये प्रच्छन्ना चन्दना क्षिप्ता, ततः श्रेष्ठी आगतः पृच्छति क्व सा चन्दना मूलाभयेन को ऽपि न वक्ति, एव द्वितीयदिने ऽपि पृष्टो न को ऽपि वक्ति, एव तृतीय दिने एका स्थविरा गृहदासी वर्त्तते तया वि चारित सा चन्दना जीवतु वराकी अह मृता तर्हि किं, तत श्रेष्ठिनो यथा स्वरूप प्रोक्त ततः—श्रेष्ठिना अपवरि-काम् उद्घाट्य निष्कासिता ततो निगडितां मुण्डितां मुण्डितशिरस क्षुत्तृषाक्रान्तां च दृष्ट्वा विषण्णेन प्रथम क्षु न्निवारणार्थम् अन्यत् किंचिदशनादि अलब्ध्वा राढकुल्माषानेव सूर्पकोणे क्षिप्त्वा तस्याः ददौ, सापि चन्दना तृती यप्रहरे द्वारि समागत्याऽतिथिसंविभाग कर्त्तुकामा देहलीमाक्रम्या ऽश्रुपूर्णलोचना तिष्ठति, श्रेष्ठी तु लोहकारस्य आ नयनाय गतस्तस्मिन् प्रस्तावे श्रीमहावीरदेवः समागतश्चन्दनबालया च भगवत्कृताभिग्रहाऽवस्थया प्रतिलाभितः पञ्चदिव्यानि देवै प्रकटीकृतानि केशा नवीना आगताः श्यामप्रलम्बमानवेणीदण्डरूपेण, निगडानि स्वर्णनूपुराणि जा तानि इन्द्रेण आगत्य चन्दना शतानीकाय दत्ता कथित च एषा भव्यरीत्या रक्षणीया भगवतः प्रथमा साध्वी भवि ष्यति, भगवतो ऽपि स्तोककाल एव तिष्ठसि शीघ्रमेव केवलज्ञानमुत्पत्स्यते इति ॥ २९ ॥ अथ भगवतो निर्णीत पारणककालमानप्रज्ञापनापूर्वं ज्ञानकल्याणक कथयन्ति—

दिवसूणछुट्ठसया पारणया पढमवयदिण चेग । इय तेरसपक्खाहिय बारसवरिसावसाणे ते ॥ ३० ॥

जम्भियग्गहि रिजुवालीय तीरे वइसाहसियदसमि पहरतिगे। छट्ठेणुक्कडिअट्ठियस्स केवल आसि सालतले

युग्म व्याख्या—हे स्वामिन्! तव पारणकदिनानि सर्वतपसां दिनद्वयेन ऊनानि अर्द्धचतुःशतानि जातानि (३४८) प्रथम पारण च एकम् इति एकेन दिवसेन ऊनानि सार्द्धतृतीयशतानि (२४९) पारणकानि अन्त्ये च छस्य च पारण केवलिपर्यायेऽभूदिति, प्रथम व्रतग्रहणदिन च एकम् इति पूर्वोक्तसर्वमीलने वर्षाणि एकादश (११) मासाः षट् (६) दिनानि षड्विंशतिः (२६) एतावन्त उपवासा भवन्ति पारणमासा एकादश (११) दिनानि एकोनविंशति (१९) इति त्रयोदशपक्षैरधिकानि द्वादश वर्षाणि जातानि तपोदिनानां पारणकदिनाना च मीलने जातानि द्वादशवर्षाणि त्रयोदशपक्षा ॥ अत्र शिष्यव्यामोहटालनार्थं पुनर्विवेचन लिख्यते षट् मासी १ तस्याः मासाः ६। चउमासी (९) तासामासाः (३६) त्रिमासी २ तयोर्मासा (६) द्विमासी (६) तयोर्मासा (१२) एक मासी (१२) तासां मासा (१२) बहुत्तरि अर्द्धमासी तासां मासा (३६) बे दोढ मासी तयोर्मासा (३) बे अढाईमासी तयोर्मासा (५) एकभद्रप्रतिमा तस्यां दिन (२) एकमहाभद्रप्रतिमा तस्या दिन (४) एकसर्वतोभद्रप्रतिमा तस्यां दिन (१०) द्वादश (१२) त्रिदैवसिक्येकरात्रिकी प्रतिमास्तासा मास (१) दिन (६) एक पञ्च दिनोन छम्मासी तस्या मासा (५) दिन (२५) (२२९) छठ तेषां मासा (१५) दिन (८), अथ तपसो मासाः (१३७) दिन (५५) दिनानां मासकरणे मास (१) दिन (२५) सर्वतपोमासादिमीलने मासा (१३८) दिन

